# Taittirīya-Āraṇyaka

Edited by Subramania Sarma, Chennai

Proofread Version of November 2005

## Chapter 10

[[10-0-0]]
स॒ह ना॑ववतु।
स॒ह नौ᳚ भुनक्तु।
स॒ह वी॒र्यं᳚ करवावहै।
ते॒ज॒स्वि ना॒वधी॑तमस्तु॒ मा वि॑द्विषा॒वहै᳚।
ॐ शान्तिः॒ शान्तिः॒ शान्तिः॑॥

[[10-1-1]]
अम्भ॑स्य पा॒रे भुव॑नस्य॒ मध्ये॒ नाक॑स्य पृ॒ष्ठे म॑ह॒तो मही॑यान्।
शु॒क्रेण॒ ज्योती॑ꣳषि समनु॒प्रवि॑ष्टः प्र॒जाप॑तिश्चरति॒ गर्भे᳚ अ॒न्तः।
यस्मि॑न्नि॒दꣳ सं च॒ वि चैति॒ सर्वं॒ यस्मि॑न्दे॒वा अधि॒ विश्वे॑ निषे॒दुः।
तदे॒व भू॒तं तदु॒ भव्य॑मा इ॒दं तद॒क्षरे॑ पर॒मे व्यो॑मन्न्।
येना॑वृतं खं च॒ दिवं॑ म॒हीं च॒ येना॑दि॒त्यस्तप॑ति॒ तेज॑सा॒ भ्राज॑सा च।
यम॒न्तस्स॑मु॒द्रे क॒वयो॒ वय॑न्ति॒ यद॒क्षरे॑ पर॒मे प्र॒जाः।
यतः॑ प्रसू॒ता ज॒गतः॑ प्रसू॒ती॒ तोये॑न जी॒वान्व्यच॑सर्ज॒ भूम्या᳚म्।
यदोष॑धीभिः पु॒रुषा᳚न्प॒शूꣳश्च॒ विवे॑श भू॒तानि॑ चराच॒राणि॑।
अतः॑ प॒रं नान्य॒दणी॑यसꣳ हि॒ परा᳚त्परं॒ यन्मह॑तो म॒हान्त᳚म्।
यदे॑कम॒व्यक्त॒मन॑न्तरूपं॒ विश्वं॑ पु॒राणं॒ तम॑सः॒ पर॑स्तात्॥ १॥

[[10-1-2]]
तदे॒वर्तं तदु॑ स॒त्यमा॑हु॒स्तदे॒व ब्रह्म॑ पर॒मं क॑वी॒नाम्।
इ॒ष्टापू॒र्तं ब॑हु॒धा जा॒तं जाय॑मानं वि॒श्वं बि॑भर्ति॒ भुव॑नस्य॒ नाभिः॑।
तदे॒वाग्निस्तद्वा॒युस्तथ्सूर्य॒स्तदु॑ च॒न्द्रमाः᳚।

तदे॒व शु॒क्रम॒मृतं॒ तद्ब्रह्म॒ तदाप॒स्स प्र॒जाप॑तिः।
सर्वे᳚ निमे॒षा ज॒ज्ञिरे॑ वि॒द्युतः॒ पुरु॑षा॒दधि॑।
क॒ला मु॑हू॒र्ताः काष्ठा᳚श्चाहोरा॒त्राश्च॑ सर्व॒शः।
अ॒र्ध॒मा॒सा मासा॑ ऋ॒तव॑स्संवथ्स॒रश्च॑ कल्पन्ताम्।
स आपः॑ प्रदु॒घे उ॒भे इ॒मे अ॒न्तरि॑क्ष॒मथो॒ सुवः॑।
नैन॑मू॒र्ध्वं न ति॒र्यञ्चं॒ न मध्ये॒ परि॑जग्रभत्।
न तस्ये॑शे॒ कश्च॒न तस्य॑ नाम॒ म॒हद्यशः॑॥ २॥

[[10-1-3]]
न स॒न्दृशे॑ तिष्ठति॒ रूप॑मस्य॒ न चक्षु॑षा पश्यति॒ कश्च॒नैन᳚म्।
हृ॒दा म॑नी॒षा मन॑सा॒ऽभिक्लृ॑प्तो॒ य ए॑नं वि॒दुरमृ॑ता॒स्ते भ॑वन्ति।
अ॒द्भ्यस्संभू॑तो हिरण्यग॒र्भ इत्य॒ष्टौ।
ए॒ष हि दे॒वः प्र॒दिशोऽनु॒ सर्वाः॒ पूर्वो॑ हि जा॒तस्स उ॒ गर्भे॑ अ॒न्तः।
स वि॒जाय॑मानस्स जनि॒ष्यमा॑णः प्र॒त्यङ्मुखा᳚स्तिष्ठति वि॒श्वतो॑मुखः।
वि॒श्वत॑श्चक्षुरु॒त वि॒श्वतो॑मुखो वि॒श्वतो॑हस्त उ॒त वि॒श्वत॑स्पात्।
सं बा॒हुभ्यां॒ नम॑ति॒ सं पत॑त्रै॒र्द्यावा॑पृथि॒वी ज॒नय॑न्दे॒व एकः॑।
वे॒नस्तत्पश्य॒न्विश्वा॒ भुव॑नानि वि॒द्वान्यत्र॒ विश्वं॒ भवत्येक॑नीळम्।
यस्मि॑न्नि॒दꣳ सं च॒ वि चैक॒ꣳ॒ स ओतः॒ प्रोत॑श्च वि॒भुः प्र॒जासु॑।
प्र तद्वो॑चे अ॒मृतं॒ नु वि॒द्वान्ग॑न्ध॒र्वो नाम॒ निहि॑तं॒ गुहा॑सु॥ ३॥

[[10-1-4]]
त्रीणि॑ प॒दा निहि॑ता॒ गुहा॑सु॒ यस्तद्वेद॑ सवि॒तुः पि॒ता स॑त्।
स नो॒ बन्धु॑र्जनि॒ता स वि॑धा॒ता धामा॑नि॒ वेद॒ भुव॑नानि॒ विश्वा᳚।
यत्र॑ दे॒वा अ॒मृत॑मानशा॒नास्तृ॒तीये॒ धामा᳚न्यभ्यैर॑यन्त।
परि॒ द्यावा॑पृथि॒वी य॑न्ति स॒द्यः परि॑ लो॒कान्परि॒ दिशः॒ परि॒ सुवः॑।
ऋ॒तस्य॒ तन्तुं॑ वित॒तं वि॒चृत्य॒ तद॑पश्य॒त्तद॑भवत्प्र॒जासु॑।
प॒रीत्य॑ लो॒कान्प॒रीत्य॑ भू॒तानि॑ प॒रीत्य॒ सर्वाः᳚ प्र॒दिशो॒ दिश॑श्च।
प्र॒जाप॑तिः प्रथम॒जा ऋ॒तस्या॒त्मना॒ऽऽत्मान॑म॒भिसंब॑भूव।
सद॑स॒स्पति॒मद्भु॑तं प्रि॒यमिन्द्र॑स्य॒ काम्य᳚म्।
स॒निं मे॒धाम॑यासिषम्।

उद्दी᳚प्यस्व जातवेदोऽप॒घ्नन्निरृ॑तिं॒ मम॑॥ ४॥

[[10-1-5]]
प॒शूꣳश्च॒ मह्य॒माव॑ह॒ जीव॑नं च॒ दिशो॑ दिश।
मा नो॑ हिꣳसीज्जातवेदो॒ गामश्वं॒ पुरु॑षं॒ जग॑त्।
अबि॑भ्रद॒ग्न आग॑हि श्रि॒या मा॒ परि॑पातय।
पुरु॑षस्य विद्म सहस्रा॒क्षस्य॑ महादे॒वस्य॑ धीमहि।
तन्नो॑ रुद्रः प्रचो॒दया᳚त्।
तत्पुरु॑षाय वि॒द्महे॑ महादे॒वाय॑ धीमहि।
तन्नो॑ रुद्रः प्रचो॒दया᳚त्।
तत्पुरु॑षाय वि॒द्महे॑ वक्रतु॒ण्डाय॑ धीमहि।
तन्नो॑ दन्तिः प्रचो॒दया᳚त्।
तत्पुरु॑षाय वि॒द्महे॑ चक्रतु॒ण्डाय॑ धीमहि॥ ५॥

[[10-1-6]]
तन्नो॑ नन्दिः प्रचो॒दया᳚त्।
तत्पुरु॑षाय वि॒द्महे॑ महासे॒नाय॑ धीमहि।
तन्न॑ष्षण्मुखः प्रचो॒दया᳚त्।
तत्पुरु॑षाय वि॒द्महे॑ सुवर्णप॒क्षाय॑ धीमहि।
तन्नो॑ गरुडः प्रचो॒दया᳚त्।
वे॒दा॒त्म॒नाय॑ वि॒द्महे॑ हिरण्यग॒र्भाय॑ धीमहि।
तन्नो᳚ ब्रह्म प्रचो॒दया᳚त्।
ना॒रा॒य॒णाय॑ वि॒द्महे॑ वासुदे॒वाय॑ धीमहि।
तन्नो॑ विष्णुः प्रचो॒दया᳚त्।
व॒ज्र॒न॒खाय॑ वि॒द्महे॑ तीक्ष्णद॒ꣳष्ट्राय॑ धीमहि॥ ६॥

[[10-1-7]]
तन्नो॑ नारसिꣳहः प्रचो॒दया᳚त्।
भा॒स्क॒राय॑ वि॒द्महे॑ महद्युतिक॒राय॑ धीमहि।
तन्नो॑ आदित्यः प्रचो॒दया᳚त्।
वै॒श्वा॒न॒राय॑ वि॒द्महे॑ लालीला॒य॑ धीमहि।

तन्नों अग्निः प्रचोदयात्।
कात्यायनाय विद्महे कन्यकुमारि धीमहि।
तन्नों दुर्गिः प्रचोदयात्।
सहस्रपरमा देवी शतमूला शताङ्कुरा।
सर्वं हरतु मे पापं दूर्वा दुस्स्वप्ननाशनी।
काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषः परि॥ ७॥

[[10-1-8]]
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च।
या शतेन प्रतनोषि सहस्रेण विरोहसि।
तस्यास्ते देवीष्टके विधेम हविषा वयम्।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा।
शिरसा धारयिष्यामि रक्षस्व मां पदेपदे।
भूमिर्धेनुर्धरणी लोकधारिणी।
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना।
मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम्।
मृत्तिके ब्रह्मदत्ताऽऽसि काश्यपेनाभिमन्त्रिता।
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम्॥ ८॥

[[10-1-9]]
मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके।
तया हतेन पापेन गच्छामि परमां गतिम्।
यत इन्द्र भयामहे ततो नो अभयं कृधि।
मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि।
स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी।
वृषेन्द्रः पुर एतु नस्स्वस्तिदा अभयंकरः।
स्वस्ति न इन्द्रो वृद्धश्रवास्स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिस्स्वस्ति नो बृहस्पतिर्दधातु।
आपान्तमन्युस्तृपलप्रभर्मा धुनिश्शिमीवाञ्छरुमां ऋजीषी।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः॥ ९॥

[[10-1-10]]

ब्रह्म॑ जज्ञा॒नं प्र॑थ॒मं पु॒रस्ता॒द्वि सी॑म॒तस्सु॒रुचो॑ वे॒न आ॑वः।
स बु॒ध्निया॑ उप॒मा अ॑स्य वि॒ष्ठास्स॒तश्च॒ योनि॒मस॑तश्च॒ विवः॑।
स्यो॒ना पृ॑थिवि॒ भवा॑ नृक्ष॒रा नि॒वेश॑नी।
यच्छा॑ न॒श्शर्म॑ स॒प्रथाः᳚।
ग॒न्ध॒द्वा॒रां दु॑राध॒र्षां᳚ नि॒त्यपु॑ष्टां करी॒षिणी᳚म्।
ई॒श्वरी॑ᳪं सर्व॑भूताना॒ं तामि॒होप॑ह्वये॒ श्रियम्।
श्रीर्मे᳚ भ॒जतु।
अलक्ष्मीर्मे᳚ न॒श्यतु।
विष्णु॑मुखा॒ वै दे॒वाश्छन्दो॑भिरि॒माँल्लो॒काना॑नपज॒य्यम॒भ्य॑जयन्।
म॒हाᳪं इन्द्रो॒ वज्र॑बाहुः षो॒डशी शर्म॑ यच्छतु॥ १०॥

[[10-1-11]]

स्व॒स्ति नो॑ म॒घवा॑ करोतु॒ हन्तु॑ पा॒प्मानं॒ यो᳚ऽस्मान्द्वेष्टि॑।
सो॒मान॒ᳪं स्वर॑णं कृणु॒हि ब्र॑ह्मणस्पते।
क॒क्षीव॑न्तं॒ य औ॑शि॒जम्।
शरी॑रं यज्ञशम॒लं कुसी॑दं॒ तस्मि᳚न्थ्सीद॒तु यो᳚ऽस्मान्द्वेष्टि॑।
चर॑णं प॒वित्रं॒ वित॑तं पुरा॒णं येन॑ पू॒तस्तर॑ति दुष्कृ॒तानि॑।
तेन॑ प॒वित्रे॑ण शु॒द्धेन॑ पू॒ता अति॑ पा॒प्मान॒मरा॑तिं तरेम।
स॒जोषा॑ इन्द्र॒ सग॑णो म॒रुद्भिः॒ सोमं॑ पिब वृत्रहञ्छूर वि॒द्वान्।
ज॒हि शत्रू॒ᳪंरप॒ मृधो॑ नुद॒स्वाथाभ॑यं कृणुहि वि॒श्वतो॑ नः।
सु॒मि॒त्रा न॒ आप॒ ओष॑धयस्सन्तु दुर्मि॒त्रास्तस्मै॑ भूयासु॒र्यो᳚ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः।
आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन॥ ११॥

[[10-1-12]]

म॒हे रणा॑य॒ चक्ष॑से।
यो व॑श्शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह न॑ः।
उ॒श॒तीरि॑व मा॒तर॑ः।
तस्मा॒ अर॑ं गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ।
आपो॑ ज॒नय॑था च नः।

हिर॑ण्यशृ॒ङ्गं वरु॑णं॒ प्रप॑द्ये ती॒र्थं मे॑ देहि॒ याचि॑तः।
य॒न्मया॑ भु॒क्तम॒साधू॑नां पा॒पेभ्य॑श्च प्र॒तिग्र॑हः।
यन्मे॒ मन॑सा वा॒चा क॒र्म॑णा वा दु॑ष्कृ॒तं कृ॒तम्।
तन्न॒ इन्द्रो॒ वरु॑णो॒ बृह॒स्पति॑स्सवि॒ता च॑ पुनन्तु॒ पुनः॑पुनः।
नमो॒ऽग्नये॑ऽप्सु॒मते॒ नम॒ इन्द्रा॑य॒ नमो॒ वरु॑णाय॒ नमो वारुण्यै॑ नमो॒ऽद्भ्यः॥ १२॥

[[10-1-13]]
यद॒पां क्रू॒रं यद॑मे॒ध्यं यद॑शा॒न्तं तदप॑गच्छतात्।
अ॒त्या॒श॒नाद॑तीपा॒ना॒द्यच्च उ॒ग्रात्प्र॑ति॒ग्रहा॑त्।
तन्नो॒ वरु॑णो रा॒जा पा॒णिना॑ ह्यव॒मर्श॑तु।
सो॑ऽहम॑पा॒पो वि॒रजो॒ निर्मु॒क्तो मु॑क्तकि॒ल्बिषः।
नाक॑स्य पृ॒ष्ठमारु॑ह्य॒ गच्छे॒द्ब्रह्म॑ सलो॒कताम्।
यश्चा॒प्सु वरु॑ण॒स्स पु॒नात्व॑घमर्ष॒णः।
इ॒मं मे॑ गङ्गे यमुने सरस्वति॒ शुतु॑द्रि॒ स्तोम॑ꣳ सचता॒ परु॒ष्णिया।
अ॒सि॒क्नि॒या म॑रुद्वृधे वि॒तस्त॒याऽऽर्जी॑कीये शृणु॒ह्या सु॒षोम॑या।
ऋ॒तं च॑ स॒त्यं चा॒भी॑द्धा॒त्तप॒सोऽध्य॑जायत।
ततो॒ रात्रि॑रजायत॒ तत॑ः समु॒द्रो अ॑र्ण॒वः॥ १३॥

[[10-1-14]]
स॒मु॒द्राद॑र्ण॒वादधि॑ संवथ्स॒रो अ॑जायत।
अ॒हो॒रा॒त्राणि॑ वि॒दध॒द्विश्व॑स्य मि॒षतो॑ व॒शी।
सू॒र्या॒च॒न्द्र॒मसौ॑ धा॒ता य॑थापू॒र्वम॑कल्पयत्।
दिवं॑ च पृथि॒वीं चा॒न्तरि॑क्ष॒मथो॒ सुवः॑।
यत्पृ॑थि॒व्याꣳ रज॑स्स्व॒मान्तरि॑क्षे वि॒रोद॑सी।
इ॒माꣳस्तदा॒पो व॑रुणः पु॒नात्व॑घमर्ष॒णः।
पु॒नन्तु॒ वस॑वः पु॒नातु॒ वरु॑णः पु॒नात्व॑घमर्ष॒णः।
ए॒ष भू॒तस्य॑ म॒ध्ये भुव॑नस्य गो॒प्ता।
ए॒ष पु॒ण्यकृ॑तां लो॒का॒नेष मृ॒त्योर्हि॑र॒ण्मय॑म्।
द्यावा॑पृथि॒व्योर्हि॑र॒ण्मय॒ꣳ स॒ꣳश्रि॒त॒ꣳ सुवः॑॥ १४॥

[[10-1-15]]

स नस्सुवस्सꣳशिशाधि।
आर्द्रं ज्वलति ज्योतिरहमस्मि।
ज्योतिर्ज्वलति ब्रह्माहमस्मि।
योऽहमस्मि ब्रह्माहमस्मि।
अहमस्मि ब्रह्माहमस्मि।
अहमेवाहं मां जुहोमि स्वाहा।
अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः।
वरुणोऽपामघमर्षणस्तस्मात्पापात्प्रमुच्यते।
रजोभूमिस्त्व माꣳ रोदयस्व प्रवदन्ति धीराः।
आक्रान्थ्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा।
वृषा पवित्रे अधि सानो अव्ये बृहथ्सोमो वावृधे सुवान इन्दुः॥ १५॥
पुरस्ताद्यशो निहितं गुहासु मम चक्रतुण्डाय धीमहि तीक्ष्णदꣳष्ट्राय धीमहि परि प्रतिष्ठितं देभुर्यच्छतु दधातनाद्योऽर्णवस्सुवो राजैकं च॥ १॥

रुद्रो रुद्रश्च दन्तिश्च नन्दिः षण्मुख एव च।
गरुडो ब्रह्म विष्णुश्च नारसिꣳहस्तथैव च।
आदित्योऽग्निश्च दुर्गिश्च क्रमेण द्वादशाम्भसि॥
म म व च म सु वे ना व भा वै कात्यायनाय॥

[[10-2-1]]
जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः।
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्।
दुर्गां देवीꣳ शरणमहं प्रपद्ये सुतरसि तरसे नमः।
अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणि विश्वा।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः।
विश्वानि नो दुर्गहा जातवेदस्सिन्धुं न नावा दुरिताऽतिपर्षि।
अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम्।
पृतनाजितꣳ सहमानमुग्रमग्निꣳ हुवेम परमाथ्सधस्थात्।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरिताऽत्यग्निः।

प्र॒त्नोषि॑ क॒मीड्यो॑ अध्व॒रेषु॑ स॒नाच्च॒ होता॒ नव्य॑श्च॒ सत्सि॑।
स्वां चा॑ग्ने त॒नुवं॑ पि॒प्रय॑स्वा॒स्मभ्यं॑ च॒ सौभ॑ग॒माय॑जस्व।
गोभि॒र्जुष्ट॑म॒युजो॒ निषि॑क्तं॒ तवे॑न्द्र विष्णो॒रनु॒संच॑रेम।
नाक॑स्य पृ॒ष्ठम॒भि सं॒वसा॑नो॒ वैष्ण॑वीं लो॒क इ॒ह मा॑दयन्ताम्॥ १६॥
दु॒रि॒ताऽत्य॒ग्निश्च॒त्वारि॑ च॥ २॥

[[10-3-1]]
भूरन्न॑म॒ग्नये॑ पृथि॒व्यै स्वाहा॒ भुवोऽन्नं॑ वा॒यवे॒ऽन्तरि॑क्षा॒य स्वाहा॒ सुव॒रन्न॑मादि॒त्याय॑ दि॒वे स्वाहा॒ भूर्भुव॒स्सुव॒रन्नं॑ च॒न्द्रम॑से दि॒ग्भ्यस्स्वाहा॒ नमो॑ दे॒वेभ्य॑स्स्व॒धा पि॒तृभ्यो॒ भूर्भुव॒स्सुव॒रन्न॒मोम्॥ १७॥ ॥ ३॥

[[10-4-1]]
भूर॒ग्नये॑ पृथि॒व्यै स्वाहा॒ भुवो॑ वा॒यवे॒ऽन्तरि॑क्षा॒य स्वाहा॒ सुव॑रादि॒त्याय॑ दि॒वे स्वाहा॒ भूर्भुव॒स्सुव॑श्च॒न्द्रम॑से दि॒ग्भ्यस्स्वाहा॒ नमो॑ दे॒वेभ्य॑स्स्व॒धा पि॒तृभ्यो॒ भूर्भुव॒स्सुव॒रग्न॒ ओम्॥ १८॥ ॥ ४॥

[[10-5-1]]
भूर॒ग्नये॑ च पृथि॒व्यै च॑ मह॒ते च॒ स्वाहा॒ भुवो॑ वा॒यवे॑ चा॒न्तरि॑क्षाय च मह॒ते च॒ स्वाहा॒ सुव॑रादि॒त्याय॑ च दि॒वे च॑ मह॒ते च॒ स्वाहा॒ भूर्भुव॒स्सुव॑श्च॒न्द्रम॑से च॒ नक्ष॑त्रेभ्यश्च दि॒ग्भ्यश्च॑ मह॒ते च॒ स्वाहा॒ नमो॑ दे॒वेभ्य॑स्स्व॒धा पि॒तृभ्यो॒ भु॒र्भुव॒स्सुव॒र्मह॒रोम्॥ १९॥ ॥ ५॥

[[10-6-1]]
पाहि नो अग्न एन॑से स्व॒हा।
पाहि नो विश्ववेद॑से स्व॒हा।
य॒ज्ञं पाहि विभाव॑सो स्व॒हा।
सर्वं॑ पाहि शतक्र॑तो स्व॒हा॥ २०॥ ॥ ६॥

[[10-7-1]]
पा॒हि नो॑ अग्न॒ एक॑या।
पा॒ह्यु॑त द्वि॒तीय॑या।
पा॒ह्यूर्जं॑ तृ॒तीय॑या।

पा॒हि गी॒र्भिश्श्व॑त॒सृ॒भि॑र्व॑सो॒ स्वाहा॑॥ २१॥ ॥ ७॥

[[10-8-1]]
यश्छन्द॑सामृष॒भो वि॒श्वरू॑पश्छन्दो॒भ्यश्छन्दा॑ꣳस्यावि॒वेश॑।
सताꣳशिक्यः पुरोवाचो॑पनि॒षदिन्द्रो॑ ज्ये॒ष्ठ इ॑न्द्रि॒याय॒ ऋषि॑भ्यो॒ नमो॑ दे॒वेभ्य॑स्स्व॒धा पि॒तृभ्यो॒
भूर्भुव॒स्सुव॒श्छन्द॒ ओम्॥ २२॥ ॥ ८॥

[[10-9-1]]
नमो॒ ब्रह्म॑णे धा॒रणं॑ मे अ॒स्त्वनि॑राकरणं धा॒रयि॑ता भूयासं॒ कर्ण॑योश्श्रु॒तं मा च्यो॑ढ्वं ममा॒मुष्य॒ ओम्॥
२३॥ ॥ ९॥

[[10-10-1]]
ऋ॒तं तप॑स्स॒त्त्यं तप॑श्श्रु॒तं तप॑श्शा॒न्तं तपो॒ द॒मस्तप॒श्श॒मस्तपो॒ दा॒नं तपो॒ य॒ज्ञं तपो॒
भूर्भुव॒स्सुव॒र्ब्रह्मै॒तदुपा॑स्स्यै॒तत्तप॑ः॥ २४॥ ॥ १०॥

[[10-11-1]]
यथा॑ वृ॒क्षस्य॑ सं॒पुष्पि॑तस्य दू॒राद्ग॒न्धो वा॑त्ये॒वं पुण्य॑स्य
क॒र्मणो॑ दू॒राद्ग॒न्धो वा॑ति॒ यथा॑ऽसिधा॒रां क॒र्तेऽव॑हितामव॒क्रामे॒ यद्यु॒वे यु॒वे हवा॑ वि॒ह्वयि॑ष्यामि क॒र्तं
प॑तिष्या॒मीत्ये॒वम॒मृता॑दा॒त्मानं॑ जुगु॒प्सेत्॥ २५॥ ॥ ११॥

[[10-12-1]]
अ॒णोरणी॑यान्मह॒तो मही॑याना॒त्मा गुहा॑यां॒ निहि॑तोऽस्य ज॒न्तोः।
तम॑क्रतुं पश्यति वीतशो॒को धा॒तुः प्र॒सादा॑न्महि॒मान॑मीशम्।
स॒प्त प्रा॒णाः प्र॒भव॑न्ति॒ तस्मा॑त्स॒प्तार्चिष॑स्स॒मिध॑स्स॒प्त जि॒ह्वाः।
स॒प्त इ॒मे लो॒का येषु॒ चर॑न्ति प्रा॒णा गु॒हाश॑यां॒ निहि॑तास्स॒प्तस॑प्त।
अत॑स्समु॒द्रा गि॒रय॑श्च स॒र्वेऽस्मात्स्यन्द॑न्ते॒ सिन्ध॑वस्स॒र्वरू॑पाः।
अत॑श्च॒ विश्वा॒ ओष॑धयो॒ रसा॑च्च॒ येनै॑ष भू॒तस्ति॑ष्ठत्यन्तरा॒त्मा।
ब्र॒ह्मा दे॒वाना॑ं पद॒वीः क॑वी॒नामृषि॒र्विप्रा॑णां महि॒षो मृ॒गाणा॑म्।
श्ये॒नो गृध्रा॑णा॒ꣳ स्वधि॑ति॒र्वना॑ना॒ꣳ सोम॑ः प॒वित्र॒मत्ये॑ति॒ रेभ॑न्न्।
अ॒जामेकां॒ लोहि॑तशु॒क्लकृ॒ष्णां ब॒ह्वीं प्र॒जां ज॒नय॑न्ती॒ꣳ सरू॑पाम्।
अ॒जो ह्येको॑ जु॒षमा॑णोऽनु॒शेते॒ जहा॑त्येनां भु॒क्तभो॑गा॒मजो॑ऽन्यः॥ २६॥

[[10-12-2]]

हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।
घृतं मिमिक्षिरे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धाम।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्।
समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृतत्वमानट्।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः।
वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः।
उप ब्रह्मा शृणवच्छस्यमानं चतुश्शृङ्गोऽवमीद्गौर एतत्।
चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेश॥ २७॥

[[10-12-3]]

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन्।
इन्द्र एकꣳ सूर्य एकं जजान वेनादेकꣳ स्वधया निष्टतक्षुः।
यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः।
हिरण्यगर्भं पश्यत जायमानꣳ स नो देवश्शुभया स्मृत्यास्संयुनक्तु।
यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्।
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः।
परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति।
वेदान्तविज्ञानसुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धसत्त्वाः।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे।
दह्रं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थम्।
तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्।
यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः।
तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः॥ २८॥
अजोऽन्य आविवेश सर्वे चत्वारि च॥ १२॥

[[10-13-1]]

सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्।
विश्वं नारायणं देवमक्षरं परमं पदम्।
विश्वतः परमन्नित्यं विश्वं नारायणꣳ हरिम्।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति।
पतिं विश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम्।
नारायणं महाज्ञेयं विश्वात्मानं परायणम्।
नारायणः परो ज्योतिरात्मा नारयणः परः।
नारायणः परं ब्रह्मतत्त्वं नारायणः परः।
नारायणः परो ध्याता ध्यानं नारायणः परः।
यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा॥ २९॥

[[10-13-2]]
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः।
अनन्तमव्ययं कविꣳ समुद्रेऽन्तं विश्वशम्भुवम्।
पद्मकोशप्रतीकाशꣳ हृदयं चाप्यधोमुखम्।
अधो निष्ठ्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति।
ज्वालमालाकुलं भाती विश्वस्यायतनं महत्।
सन्ततꣳ सिलाभिस्तु लम्बत्याकोशसन्निभम्।
तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन्थ्सर्वं प्रतिष्ठितम्।
तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः।
सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः।
तिर्यगूर्ध्वमधश्शायी रश्मयस्तस्य सन्तता।
सन्तापयति स्वं देहमापादतलमस्तगः।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः।
नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा।
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा।
तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः।
स ब्रह्म स शिवस्स हरिस्सेन्द्रस्सोऽक्षरः परमस्स्वराट्॥ ३०॥
अपि वा सन्तता षट्च॥ १३॥

[[10-14-1]]

आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषां लोकस्सैषा त्रय्येव विद्या तपति य एषोँऽन्तरादित्ये हिरण्मयः पुरुषः॥ ३१॥ ॥ १४॥

[[10-15-1]]

आदित्यो वै तेज ओजो बलं यशश्चक्षुश्श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युस्सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तथ्सत्यमन्नममृतो जीवो विश्वः कतमस्स्वयंभु ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपतिर्ब्रह्मणस्सायुज्यꣳ सलोकतामाप्नोत्येतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेदेँत्युपनिषत्॥ ३२॥ ॥ १५॥

[[10-16-1]]

निधनपतये नमः।

निधनपतान्तिकाय नमः।

ऊर्ध्वाय नमः।

ऊर्ध्वलिङ्गाय नमः।

हिरण्याय नमः।

हिरण्यलिङ्गाय नमः।

सुवर्णाय नमः।

सुवर्णलिङ्गाय नमः।

दिव्याय नमः।

दिव्यलिङ्गाय नमः॥ ३३॥

[[10-16-2]]

भवाय नमः।

भवलिङ्गाय नमः।

शर्वाय नमः।

शर्वलिङ्गाय नमः।

शिवाय नमः।

शिवलिङ्गाय नमः।

ज्वलाय नमः।
ज्वललिङ्गाय नमः।
आत्माय नमः।
आत्मलिङ्गाय नमः।
परमाय नमः।
परमलिङ्गाय नमः।
एतथ्सोमस्य सूर्यस्य सर्वलिङ्गꣳ स्थापयति पाणिमन्त्रं पवित्रम्॥ ३४॥ ॥ १६॥

[[10-17-1]]
सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः।
भवेभवे नातिभवे भवस्व माम्।
भवोद्भवाय नमः॥ ३५॥ ॥ १७॥

[[10-18-1]]
वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः॥ ३६॥ ॥ १८॥

[[10-19-1]]
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः।
सर्वेभ्यस्सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥ ३७॥ ॥ १९॥

[[10-20-1]]
तत्पुरुषाय विद्महे महादेवाय धीमहि।
तन्नो रुद्रः प्रचोदयात्॥ ३८॥ ॥ २०॥

[[10-21-1]]
ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥ ३९॥ ॥ २१॥

[[10-22-1]]
नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये

नमो नमः॥ ४०॥ ॥ २२॥

[[10-23-1]]
ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः॥ ४१॥ ॥ २३॥

[[10-24-1]]
सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु।
पुरुषो वै रुद्रस्सन्महो नमोनमः।
विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु॥ ४२॥ ॥ २४॥

[[10-25-1]]
कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे।
वोचेम शंतमꣳ हृदे।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु॥ ४३॥ ॥ २५॥

[[10-26-1]]
यस्य वैकङ्कत्यग्निहोत्रहवणी भवति प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै॥ ४४॥ ॥ २६॥

[[10-27-1]]
कृणुष्व पाज इति पञ्च॥ ४५॥ ॥ २७॥

[[10-28-1]]
अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषाꣳ सर्वभूतानां माता मेदिनी महता मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृतेति वसिष्ठः॥ ४६॥ ॥ २८॥

[[10-29-1]]
आपो वा इदꣳ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ओम्॥ ४७॥ ॥ २९॥

[[10-30-1]]
आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम्॥
यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा॥ ४८॥ ॥ ३०॥

[[10-31-1]]
अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः।
पापेभ्यो रक्षन्ताम्।
यदह्ना पापमकार्षम्।
मनसा वाचा हस्ताभ्याम्।
पद्भ्यामुदरेण शिश्ना।
अहस्तदवलुम्पतु।
यत्किंच दुरितं मयि।
इदमहं माममृतयोनौ।
सत्ये ज्योतिषि जुहोमि स्वाहा॥ ४९॥ ॥ ३१॥

[[10-32-1]]
सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः।
पापेभ्यो रक्षन्ताम्।
यद्रात्रिया पापमकार्षम्।
मनसा वाचा हस्ताभ्याम्।
पद्भ्यामुदरेण शिश्ना।
रात्रिस्तदवलुम्पतु।
यत्किंच दुरितं मयि।
इदमहं माममृतयोनौ।
सूर्ये ज्योतिषि जुहोमि स्वाहा॥ ५०॥ ॥ ३२॥

[[10-33-1]]
ओमित्येकाक्षरं ब्रह्म।

अग्निर्देवता ब्रह्म इत्यार्षम्।
गायत्रं छन्दं परमात्मं सरूपम्।
सायुज्यं विनियोगम्॥ ५१॥ ॥ ३३॥

[[10-34-1]]
आयातु वरदा देवी अक्षरं ब्रह्म सम्मितम्।
गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे।
यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते।
यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रतिमुच्यते।
सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वति॥ ५२॥ ॥ ३४॥

[[10-35-1]]
ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामाऽसि विश्वमसि विश्वायुस्सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि सवित्रीमावाहयामि सरस्वतीमावाहयामि छन्दर्षीनावाहयामि श्रियमावाहयामि गायत्रिया गायत्रीच्छन्दो विश्वामित्र ऋषिस्सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳरुद्रश्शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदा षटकुक्षिः पञ्चशीर्षोपनयने विनियोगः।
ओं भूः।
ओं भुवः।
ओꣳ सुवः।
ओं महः।
ओं जनः।
ओं तपः॥
ओꣳ सत्यम्।
ओं तथ्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्।
ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्॥ ५३॥ ॥ ३५॥

[[10-36-1]]
उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्।

स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता।
आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा प्रजातुं ब्रह्मलोकम्॥ ५४॥ ॥ ३६॥

[[10-37-1]]
घृणिस्सूर्य आदित्यो न प्रभा वात्यक्षरम्।
मधु क्षरन्ति तद्रसम्।
सत्यं वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्॥ ५५॥ ॥ ३७॥

[[10-38-1]]
ब्रह्ममेतु माम्।
मधुमेतु माम्।
ब्रह्ममेव मधुमेतु माम्।
यास्ते सोम प्रजा वथ्सोऽभि सो अहम्।
दुष्ष्वप्नहन्दुरुष्षह।
यास्ते सोम प्राणाꣳस्ताञ्जुहोमि।
त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्।
ब्रह्महत्यां वा एते घ्नन्ति।
ये ब्राह्मणास्त्रिसुपर्णं पठन्ति।
ते सोमं प्राप्नुवन्ति।
आसहस्रात्पङ्क्तिं पुनन्ति।
ओम्॥ ५६॥ ॥ ३८॥

[[10-39-1]]
ब्रह्म मेधया।
मधु मेधया।
ब्रह्ममेव मधु मेधया।
अद्या नो देव सवितः प्रजावत्सावीस्सौभगम्।
परा दुष्ष्वप्नियꣳ सुव।
विश्वानि देव सवितर्दुरितानि परासुव।
यद्भद्रं तन्म आसुव।
मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः।

माध्वीर्नस्सन्त्वोषधीः।
मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः।
मधु द्यौरस्तु नः पिता।
मधु मान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः।
माध्वीर्गावो भवन्तु नः।
य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्।
भ्रूणहत्यां वा एते घ्नन्ति।
ये ब्राह्मणास्त्रिसुपर्णं पठन्ति।
ते सोमं प्राप्नुवन्ति।
आसहस्रात्पङ्क्तिं पुनन्ति।
ओम्॥ ५७॥ ॥ ३९॥

[[10-40-1]]
ब्रह्म मेधवा।
मधु मेधवा।
ब्रह्ममेव मधु मेधवा।
ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्।
श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्न्।
हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।
ऋचे त्वा रुचे त्वा समित्स्रवन्ति सरितो न धेनाः।
अन्तर्हृदा मनसा पूयमानाः।
घृतस्य धारा अभिचाकशीमि।
हिरण्ययो वेतसो मध्य आसाम्।
तस्मिन्थ्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधु देवताभ्यः।
तस्यासते हरयस्सप्त तीरे स्वधां दुहाना अमृतस्य धाराम्।
य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्।
वीरहत्यां वा एते घ्नन्ति।
ये ब्राह्मणास्त्रिसुपर्णं पठन्ति।
ते सोमं प्राप्नुवन्ति।

आ॒स॒ह॒स्रात्प॒ङ्क्तिं पुन॑न्ति।
ओम्॥ ५८॥ ॥ ४०॥

[[10-41-1]]
मे॒धा दे॒वी जु॒षमा॑णा न॒ आगा᳚द्वि॒श्वाची॑ भ॒द्रा सु॑मन॒स्यमा॑ना।
त्वया॒ जुष्टा॑ नु॒दमा॑णा दु॒रुक्ता᳚न्बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः᳚।
त्वया॒ जुष्ट॑ ऋ॒षिर्भ॑वति दे॑वि॒ त्वया॒ ब्रह्मा॑ ग॒तश्री॑रु॒त त्वया᳚।
त्वया॒ जुष्ट॑श्चि॒त्रं वि॑न्दते वसु॒ सा नो॑ जुषस्व॒ द्रवि॑णो न मेधे॥ ५९॥ ॥ ४१॥

[[10-42-1]]
मे॒धां म॒ इन्द्रो॑ ददातु मे॒धां दे॒वी सर॑स्वती।
मे॒धां मे॑ अ॒श्विना॑वु॒भावाध॑त्तां॒ पुष्क॑रस्रजा।
अ॒प्स॒रासु॑ च॒ या मे॒धा ग॑न्ध॒र्वेषु॑ च॒ यन्मन॑ः।
दैवीं᳚ मे॒धा सर॑स्वती॒ स मां᳚ मे॒धा सु॒रभि॑र्जुषता॒ꣳ स्वाहा᳚॥ ६०॥ ॥ ४२॥

[[10-43-1]]
आ मां᳚ मे॒धा सु॒रभि॑र्वि॒श्वरू॑पा॒ हिर॑ण्यवर्णा॒ जग॑ती जग॒म्या।
ऊर्ज॑स्वती॒ पय॑सा॒ पिन्व॑माना॒ सा मां᳚ मे॒धा सु॒प्रती॑का जुषन्ताम्॥ ६१॥ ॥ ४३॥

[[10-44-1]]
मयि॑ मे॒धां मयि॑ प्र॒जां मय्य॒ग्निस्तेजो॑ दधातु॒ मयि॑ मे॒धां मयि॑ प्र॒जां मयीन्द्र॑ इन्द्रि॒यं द॑धातु॒ मयि॑ मे॒धां मयि॑ प्र॒जां मयि॒ सूर्यो॒ भ्राजो॑ दधातु॥ ६२॥ ॥ ४४॥

[[10-45-1]]
अपै॑तु मृ॒त्युर॒मृतं॑ न॒ आग॑न्वैवस्व॒तो नो॒ अभ॑यं कृणोतु।
प॒र्णं व॒न॒स्पते॑रिवा॒भि न॑श्शीयताꣳ र॒यिस्सच॑तां न॒श्शची॒पति॑ः॥ ६३॥ ॥ ४५॥

[[10-46-1]]
परं॑ मृत्यो॒ अनु॒ परे॑हि॒ पन्थां॒ यस्ते॒ स्व इत॑रो दे॒वयाना᳚त्।
चक्षु॑ष्मते शृण्व॒ते ते᳚ ब्रवीमि॒ मा न॑ः प्र॒जाꣳ री॑रिषो॒ मोत वी॒रान्॥ ६४॥ ॥ ४६॥

[[10-47-1]]

वातं॑ प्रा॒णं मन॑सा॒ऽन्वार॑भामहे प्र॒जाप॑तिं॒ यो भुव॑नस्य गो॒पाः ।
स नो॑ मृ॒त्योस्त्रा॑यतां॒ पात्वꣳह॑सो॒ ज्योग्जी॒वा ज॒राम॑शीमहि ॥ ६५॥ ॥ ४७॥

[[10-48-1]]
अ॒मु॒त्र॒भूया॒द॒ध॒ यद्य॒मस्य॒ बृह॑स्पते अ॒भिश॑स्ते॒रमु॑ञ्चः ।
प्रत्यौ॑हताम॒श्विना॑ मृ॒त्युम॑स्मद्दे॒वाना॑मग्ने भि॒षजा॒ शची॑भिः ॥ ६६ ॥ ॥ ४८॥

[[10-49-1]]
हरि॒ꣳ॒ हर॑न्त॒मनु॑यन्ति दे॒वा विश्व॒स्येशा॑नं वृष॒भं म॑ती॒नाम् ।
ब्रह्म॒ सरू॑प॒मनु॑ मे॒दमागा॒दय॑नं॒ मा विव॑धी॒र्विक्र॑मस्व ॥ ६७॥ ॥ ४९॥

[[10-50-1]]
शल्कै॑र॒ग्निमि॑न्धा॒न उ॒भौ लो॒कौ स॑नेम॒हम् ।
उ॒भयौ॑र्लौ॒कयौ॑र्ऋ॒ध्वाऽति॑ मृ॒त्युं त॑राम्य॒हम् ॥ ६८॥ ॥ ५०॥

[[10-51-1]]
मा छि॑दो मृत्यो॒ मा व॑धी॒र्मा मे॒ बल॒ं विवृ॑हो॒ मा प्रमो॑षीः ।
प्र॒जां मा मे॑ रीरिष॒ आयु॑रुग्र नृ॒चक्ष॑सं त्वा ह॒विषा॑ विधेम ॥ ६९॥ ॥ ५१॥

[[10-52-1]]
मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम् ।
मा नो॑ वधीः पि॒तर॒ं मोत मा॒तरं॑ प्रि॒या मा न॑स्त॒नुवो॑ रुद्र रीरिषः ॥ ७० ॥ ॥ ५२॥

[[10-53-1]]
मा न॑स्तो॒के तन॑ये॒ मा न॒ आयु॑षि॒ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः ।
वी॒रान्मा नो॑ रुद्र भामि॒तो व॑धीर्ह॒विष्म॑न्तो॒ नम॑सा विधेम ते ॥ ७१ ॥ ॥ ५३॥

[[10-54-1]]
प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव ।
यत्का॑मस्ते जुहु॒मस्तन्नो॑ अस्तु व॒यꣳ स्या॑म॒ पत॑यो रयी॒णाम् ॥ ७२॥ ॥ ५४॥

[[10-55-1]]

स्व॒स्ति॒दा वि॒शस्पति॑र्वृत्र॒हा विमृधो॑ व॒शी।
वृषेन्द्र॑ः पु॒र ए॑तु नस्स्वस्ति॒दा अ॑भयंक॒रः॥ ७३॥ ॥ ५५॥

[[10-56-1]]
त्र्य॑म्बकं यजामहे सु॒गन्धिं पु॑ष्टि॒वर्ध᳚नम्।
उ॒र्वा॒रु॒कमि॑व॒ बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒ मामृता᳚त्॥ ७४॥ ॥ ५६ ॥

[[10-57-1]]
ये ते॑ स॒हस्र॑म॒युतं॒ पाशा॒ मृत्यो॒ मर्त्या᳚य॒ हन्त॑वे।
तान्य॒ज्ञस्य॑ मा॒यया॒ सर्वा॒नव॑यजामहे॥ ७५॥ ॥ ५७॥

[[10-58-1]]
मृ॒त्यवे॒ स्वाहा॑ मृ॒त्यवे॒ स्वाहा᳚॥ ७६ ॥ ॥ ५८॥

[[10-59-1]]
दे॒वकृ॑त॒स्यैन॑सोऽव॒यज॑नमसि॒ स्वाहा᳚।
म॒नु॒ष्य॑कृत॒स्यैन॑सोऽव॒यज॑नमसि॒ स्वाहा᳚।
पि॒तृकृ॑त॒स्यैन॑सोऽव॒यज॑नमसि॒ स्वाहा᳚।
आ॒त्मकृ॑त॒स्यैन॑सोऽव॒यज॑नमसि॒ स्वाहा᳚।
अ॒न्यकृ॑त॒स्यैन॑सोऽव॒यज॑नमसि॒ स्वाहा᳚।
अ॒स्मत्कृ॑त॒स्यैन॑सोऽव॒यज॑नमसि॒ स्वाहा᳚।
यद्दि॒वा च॒ नक्तं॑ चैन॑श्चकृ॒म तस्या॑व॒यज॑नमसि॒ स्वाहा᳚।
यथ्स्व॒पन्त॑श्च॒ जाग्र॑त॒श्चैन॑श्चकृ॒म तस्या॑व॒यज॑नमसि॒ स्वाहा᳚।
यथ्सु॒षुप्त॑श्च॒ जाग्र॑त॒श्चैन॑श्चकृ॒म तस्या॑व॒यज॑नमसि॒ स्वाहा᳚।
यद्वि॒द्वाꣳस॒श्चावि॑द्वाꣳस॒श्चैन॑श्चकृ॒म तस्या॑व॒यज॑नमसि॒ स्वाहा᳚।
एनस एनसोऽवयजनम॑सि स्वा॒हा॥ ७७॥ ॥ ५९॥

[[10-60-1]]
यद्वो॑ देवाश्चकृ॒म जि॒ह्वया॑ गु॒रु मन॑सो वा॒ प्रयु॑ती दे॒व॒हेड॑नम्।
अरा॑ वा॒यो नो॑ अ॒भि दु॑च्छुना॒यते॒ तस्मि॒न्तदेनो॑ वसवो॒ निधे॑तन॒ स्वाहा᳚॥ ७८॥ ॥ ६०॥

[[10-61-1]]

कामोऽकार्षीन्नमो नमः।
कामोऽकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता एष ते काम कामाय स्वाहा॥ ७९॥ ॥ ६१॥

[[10-62-1]]
मन्युरकार्षीन्नमो नमः।
मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा॥ ८०॥ ॥ ६२॥

[[10-63-1 ]]
तिलाञ्जुहोमि सरसाꣳ सपिष्टान्गन्धार मम चित्ते रमन्तु स्वाहा॥
गावो हिरण्यं धनमन्नपानꣳ सर्वेषाꣳ श्रियै स्वाहा॥
श्रियं च लक्ष्मीं च पुष्टिं च कीर्तिं चाऽऽनृण्यताम्।
ब्रह्मण्यं बहुपुत्रताम्।
श्रद्धामेधे प्रजास्संददातु स्वाहा॥ ८१॥ ॥ ६३॥

[[10-64-1]]
तिलाः कृष्णास्तिलाश्श्वेतास्तिलास्सौम्या वशानुगाः।
तिलाः पुनन्तु मे पापं यत्किञ्चिद्दुरितं मयि स्वाहा॥
चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः।
गोस्तेयꣳ सुरापानं भ्रूणहत्या तिला शान्तिꣳ शमयन्तु स्वाहा॥
श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिं चाऽऽनृण्यताम्।
ब्रह्मण्यं बहुपुत्रताम्।
श्रद्धामेधे प्रज्ञा तु जातवेदस्संददातु स्वाहा॥ ८२॥ ॥ ६४॥

[[10-65-1]]
प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा।
वाङ्मनश्चक्षुश्श्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूतिस्संकल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा।
त्वक्चर्ममाꣳसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा।

शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपायवो मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚।
उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्षि देहि देहि ददापयिता मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚॥ ८३॥ ॥ ६५॥

[[10-66-1]]
पृथिव्यप्तेजो वायुराकाशा मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚।
शब्दस्पर्शरूपरसगन्धा मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚।
मनोवाक्कायकर्माणि मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚।
अव्यक्तभावै॑रहंका॒रै॒र्ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚।
आत्मा मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚।
अन्तरात्मा मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚।
परमात्मा मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚।
क्षु॒धे स्वाहा᳚।
क्षुत्पि॑पासा॒य॒ स्वाहा᳚।
विवि॑ट्यै॒ स्वाहा᳚।
ऋग्वि॑धाना॒य॒ स्वाहा᳚।
क॒षो॒त्का॒य॒ स्वाहा᳚।
क्षु॒त्पि॒पा॒सामं॑लं ज्ये॒ष्ठा॒म॒ल॒क्ष्मीर्ना॑शया॒म्यहम्।
अभू॑ति॒मस॑मृद्धिं॒ च॒ सर्वा॒न्निर्णु॑द मे पाप्मा॑नꣳ॒ स्वा॒हा।
अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा मे॑ शुध्य॒न्ता॒ं ज्योति॑र॒हं वि॒रजा॑ विपा॒प्मा भू॑यास॒ꣳ॒ स्वाहा᳚॥ ८४॥ ॥ ६६॥

[[10-67-1]]
अ॒ग्नये॒ स्वाहा᳚।
विश्वे᳚भ्यो दे॒वेभ्य॒स्स्वाहा᳚।
ध्रु॒वाय॑ भू॒माय॒ स्वाहा᳚।
ध्रु॒व॒क्षित॑ये॒ स्वाहा᳚।
अ॒च्यु॒त॒क्षित॑ये॒ स्वाहा᳚।
अ॒ग्नये᳚ स्विष्ट॒कृ॒ते॒ स्वाहा᳚।

धर्माय स्वाहा।
अधर्माय स्वाहा।
अद्भ्यस्स्वाहा।
ओषधिवनस्पतिभ्यः स्वाहा॥ ८५॥

[[10-67-2]]
रक्षोदेवजनेभ्यस्स्वाहा।
गृह्याभ्यस्स्वाहा।
अवसानेभ्यस्स्वाहा।
अवसानपतिभ्यस्स्वाहा।
सर्वभूतेभ्यस्स्वाहा।
कामाय स्वाहा।
अन्तरिक्षाय स्वाहा।
यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने स्वाहा।
पृथिव्यै स्वाहा।
अन्तरिक्षाय स्वाहा॥ ८६॥

[[10-67-3]]
दिवे स्वाहा।
सूर्याय स्वाहा।
चन्द्रमसे स्वाहा।
नक्षत्रेभ्यस्स्वाहा।
इन्द्राय स्वाहा।
बृहस्पतये स्वाहा।
प्रजापतये स्वाहा।
ब्रह्मणे स्वाहा।
स्वधा पितृभ्यस्स्वाहा।
नमो रुद्राय पशुपतये स्वाहा॥ ८७॥

[[10-67-4]]
देवेभ्यस्स्वाहा।

पि॒तृभ्य॑स्स्व॒धाऽस्तु॑।
भू॒तेभ्यो॒ नम॑ः।
म॒नु॒ष्ये᳚भ्यो॒ हन्ता᳚।
प्र॒जाप॑तये॒ स्वाहा᳚।
प॒र॒मे॒ष्ठिने॒ स्वाहा᳚।
यथा कूप॒श्श॒तधा॑रस्स॒हस्र॑धारो॒ अक्षि॑तः।
ए॒वा मे॑ अस्तु धा॒न्य॑ꣳ स॒हस्र॑धार॒मक्षि॑तम्।
धन॑धान्यै॒ स्वाहा᳚।
ये भूताः प्र॒चर॑न्ति॒ दि॒वा॒नक्तं॒ बलि॑मि॒च्छन्तो॑ वि॒तुद॑स्य॒ प्रेष्या᳚ः।
तेभ्यो॑ ब॒लिं पु॑ष्टिकामो॑ हरा॒मि॒ मयि॒ पुष्टिं॒ पुष्टि॑पतिर्द॑धातु॒ स्वाहा᳚॥ ८८॥
ओ॒ष॒धि॒व॒न॒स्प॒तिभ्य॒स्स्वाहा॒ऽन्तरि॑क्षाय॒ स्वाहा॒ नमो॑ रु॒द्राय॑ पशु॒पत॑ये॒ स्वाहा॑ वि॒तुद॑स्य॒ प्रेष्या॒ एकं॑ च॥ ६७॥

[[10-68-1]]
ओ᳚ं तद्ब्रह्म।
ओ᳚ं तद्वा॒युः।
ओ᳚ं तदा॒त्मा।
ओ᳚ं तथ्स॒त्यम्।
ओ᳚ं तथ्सर्वम्᳚।
ओ᳚ं तत्पुरो॒र्नमः।
अन्तश्चर॑ति भू॒तेषु॒ गुहा॒यां वि॑श्वमू॒र्ति॑षु।
त्वं य॒ज्ञस्त्वं वषट्का॒रस्त्वमिन्द्र॒स्त्वꣳ रु॒द्रस्त्वं विष्णु॒स्त्वं ब्रह्म॒ त्वं॑ प्रजा॒पतिः।
त्वं त॑दाप॒ आपो॒ ज्योती॒ रसो॒ऽमृतं॒ ब्रह्म॒ भूर्भुव॒स्सुव॒रोम्॥ ८९॥ ॥ ६८॥

[[10-69-1]]
श्र॒द्धाया᳚ं प्रा॒णे निवि॑ष्टो॒ऽमृतं॑ जुहोमि।
श्र॒द्धाया॑मपा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि।
श्र॒द्धाया᳚ं व्या॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि।
श्र॒द्धाया॑मुदा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि।
श्र॒द्धायाꣳ॑ समा॒ने निवि॑ष्टो॒ऽमृतं॑ जुहोमि।

ब्रह्मणि म आत्माऽमृतत्वाय।
अमृतोपस्तरणमसि।
श्रद्धायां प्राणे निविंष्टोऽमृतं जुहोमि।
शिवो मा विशाप्रदाहाय।
प्राणाय स्वाहा।
श्रद्धायामपाने निविंष्टोऽमृतं जुहोमि।
शिवो मा विशाप्रदाहाय।
अपानाय स्वाहा।
श्रद्धायां व्याने निविंष्टोऽमृतं जुहोमि।
शिवो मा विशाप्रदाहाय।
व्यानाय स्वाहा।
श्रद्धायामुदाने निविंष्टोऽमृतं जुहोमि।
शिवो मा विशाप्रदाहाय।
उदानाय स्वाहा।
श्रद्धायाँ समाने निविंष्टोऽमृतं जुहोमि।
शिवो मा विशाप्रदाहाय।
समानाय स्वाहा।
ब्रह्मणि म आत्माऽमृतत्वाय।
अमृतापिधानमसि॥ ९०॥ ॥ ६९॥

[[10-70-1]]
श्रद्धायां प्राणे निविंश्यामृतँ हुतम्।
प्राणमन्नेनाप्यायस्व।
श्रद्धायामपाने निविंश्यामृतँ हुतम्।
अपानमन्नेनाप्यायस्व।
श्रद्धायां व्याने निविंश्यामृतँ हुतम्।
व्यानमन्नेनाप्यायस्व।
श्रद्धायामुदाने निविंश्यामृतँ हुतम्।
उदानमन्नेनाप्यायस्व।
श्रद्धायाँ समाने निविंश्यामृतँ हुतम्।

स॒मा॒नमन्ने॑नाप्यायस्व॥ ९१॥ ॥ ७०॥

[[10-71-1]]
अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च॑ समा॒श्रितः।
ईशस्सर्व॑स्य जगतः प्रभुः प्रीणाति॑ वि॒श्वभुक्॥ ९२॥ ॥ ७१॥

[[10-72-1]]
वाङ्म॑ आ॒सन्न्।
न॒सोः प्रा॒णः।
अ॒क्ष्योश्चक्षुः॑।
कर्ण॑यो॒श्श्रोत्र᳚म्।
बा॒हु॒वोर्बल᳚म्।
ऊ॒रु॒वोरोजः॑।
अरि॑ष्टा॒ विश्वा॒न्यङ्गा॑नि त॒नूः।
त॒नुवा॑ मे स॒ह नम॑स्ते अस्तु॒ मा मा॑ हिꣳसीः॥ ९३॥ ॥ ७२॥

[[10-73-1]]
वय॑स्सुप॒र्णा उप॑सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः।
अप॑ ध्वा॒न्तमू᳚र्णु॒हि पू॒र्द्धि चक्षु॑र्मुमु॒ग्ध्य॑स्मान्नि॒धये॑ऽव ब॒द्धान्॥ ९४॥ ॥ ७३॥

[[10-74-1]]
प्राणानां ग्रन्थिरसि रुद्रो मा॑ विशा॒न्तकः।
तेनान्नेना᳚प्याय॒स्व॥ ९५॥ ॥ ७४॥

[[10-75-1]]
नमो रुद्राय विष्णवे मृत्यु॑र्मे पा॒हि॥ ९६॥ ॥ ७५॥

[[10-76-1]]
त्वम॑ग्ने॒ द्युभि॒स्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒स्परि॑।
त्वं वने᳚भ्य॒स्त्वमोष॑धीभ्य॒स्त्वं नृ॒णां नृ॑पते जायसे॒ शुचिः॑॥ ९७॥ ॥ ७६॥

[[10-77-1]]

शि॒वेन॑ मे॒ सन्ति॑ष्ठस्व स्यो॒नेन॑ मे॒ सन्ति॑ष्ठस्व सु॒भूतेन॑ मे॒ सन्ति॑ष्ठस्व ब्रह्मवर्च॒सेन॑ मे॒ सन्ति॑ष्ठस्व य॒ज्ञस्यर्द्धि॒मनु॒ सन्ति॑ष्ठ॒स्वोप॑ ते यज्ञ॒ नम॒ उप॑ ते॒ नम॒ उप॑ ते॒ नमः॥ ९८॥ ॥ ७७॥

[[10-78-1]]

स॒त्यं पर॒ं पर॒ꣳ॒ स॒त्यꣳ॒ स॒त्येन॒ न सु॑व॒र्गाल्लो॒काच्च्य॑वन्ते क॒दाच॒न स॒ताꣳ॒ हि स॒त्यं तस्मा॑थ्स॒त्ये र॑मन्ते॒ त॒प इ॒ति॒ तपो॒ नान॑श॒नात्पर॒ं यद्धि पर॒ं त॒पस्तद्दु॒र्धर्॑षं॒ तद्दुरा॑धर्षं॒ तस्मा॒त्तप॑सि रमन्ते॒ द॒म इ॒ति॒ निय॑तं ब्र॒ह्मचा॒रिण॒स्तस्मा॒द्दमे॑ रमन्ते॒ श॒म इत्यर॑ण्ये मु॒नय॒स्तमा॒च्छमे॑ रमन्ते दा॒नमि॒ति॒ सर्वा॑णि भू॒तानि॑ प्र॒शꣳ॑सन्ति दा॒नान्नाति॑दु॒श्चर॒ं तस्मा॑द्दा॒ने र॑मन्ते ध॒र्म इ॒ति ध॒र्मेण॒ सर्व॑मि॒दं परि॑गृहीतं ध॒र्मान्नाति॑दु॒ष्कर॒ं तस्मा॑द्ध॒र्मे र॑मन्ते प्र॒जन॒ इ॒ति भू॒याꣳ॑स॒स्तस्मा॒द्भूयि॑ष्ठाः प्रजा॑यन्ते॒ तस्मा॒द्भूयि॑ष्ठाः प्र॒जन॑ने रमन्ते॒ऽग्नय॒ इत्या॑ह॒ तस्मा॑द॒ग्नय॒ आधा॑तव्याः अग्निहो॒त्रमित्या॑ह॒ तस्मा॑दग्निहो॒त्रे र॑मन्ते य॒ज्ञ इति॑ य॒ज्ञो हि दे॒वास्तस्मा॑द्य॒ज्ञे र॑मन्ते मा॒नस॒मिति॑ वि॒द्वाꣳ॒स॒स्तस्मा॑द्वि॒द्वाꣳ॑स॒ एव मा॑न॒से र॑मन्ते न्या॒स इति॑ ब्र॒ह्मा ब्र॒ह्मा हि प॒रः प॒रो हि ब्र॒ह्मा तानि॒ वा ए॒तान्यव॑राणि॒ पराꣳ॑सि न्या॒स ए॒वात्य॑रेचय॒द्य ए॒वं वेदे॑त्यु॒पनि॒षत्॥ ९९॥ ॥ ७८॥

[[10-79-1]]

प्रा॒जा॒प॒त्यो हारु॑णिस्सु॒पर्णे॑यः प्र॒जाप॑तिं पि॒तर॒मुप॑ससार॒ किं भ॑गवन्तः प॑र॒मं व॑द॒न्तीति॒ तस्मै॒ प्रो॑वाच स॒त्येन॑ वा॒युरावा॑ति स॒त्येना॑दि॒त्यो रो॑चते दि॒वि स॒त्यं वा॒चः प्र॑ति॒ष्ठा स॒त्ये स॒र्वं प्रति॑ष्ठि॒तं तस्मा॑थ्स॒त्यं प॑र॒मं वद॑न्ति॒ तप॑सा दे॒वा दे॒वता॒मग्र॑ आय॒न्तप॒सर्ष॑य॒स्सुव॒रन्व॑विन्द॒न्तप॑सा स॒पत्ना॒न्प्रणु॑दा॒मारा॑ती॒स्तप॑सि स॒र्वं प्रति॑ष्ठि॒तं तस्मा॒त्तपः॑ प॒र॒मं वद॑न्ति॒ दमे॑न दा॒न्ताः कि॒ल्बिष॑मवधू॒न्वन्ति॒ दमे॑न ब्रह्मचा॒रिण॒स्सुव॑रगच्छ॒न्दमो॑ भू॒ताना॑ꣳ दु॒रा॒धर्षं॒ दमे॑ स॒र्वं प्रति॑ष्ठि॒तं तस्मा॒द्दमः॑ प॒र॒मं वद॑न्ति॒ शमे॑न शा॒न्ताश्शि॒वमा॒चर॑न्ति॒ शमे॑न ना॒कं मु॒नयो॒ऽन्वविन्द॒ञ्छमो॑ भू॒ताना॑ꣳ दु॒रा॒धर्ष॒ञ्छमे॑ स॒र्वं प्रति॑ष्ठि॒तं तस्मा॒च्छमः॑ प॒र॒मं वद॑न्ति दा॒नं य॒ज्ञाना॒ं वरू॑थं॒ दक्षि॑णा लो॒के दा॒तार॒ꣳ॒ सर्वभू॒तान्युप॑जी॒वन्ति॒ दा॒नेनारा॑ती॒रपा॑नुदन्त दा॒नेन॑ द्विष॒न्तो मि॒त्रा भ॑वन्ति दा॒ने स॒र्वं प्रति॑ष्ठि॒तं तस्मा॑द्दा॒नं प॑र॒मं वद॑न्ति ध॒र्मो विश्व॑स्य॒ जग॑तः प्रति॒ष्ठा लो॒के ध॒र्मिष्ठं॑ प्र॒जा उ॑पस॒र्पन्ति॑ ध॒र्मेण॑ पा॒पम॑पनु॒द॑ति ध॒र्मे स॒र्वं प्रति॑ष्ठि॒तं तस्मा॑द्ध॒र्मं प॑र॒मं वद॑न्ति प्र॒जन॑नं॒ वै प्र॑ति॒ष्ठा लो॒के सा॒धु प्र॒जाया॑स्त॒न्तुं त॑न्वा॒नः पि॑तृ॒णाम॑नृ॒णो भव॑ति॒ तदे॑व त॒स्या अनृ॒णं तस्मा॑त्प्र॒जन॑नं प॒र॒मं वद॑न्त्य॒ग्नयो॒ वै त्रयी॑ वि॒द्या दे॑व॒यानः॑ पन्था॑ गार्ह॑पत्य ऋ॒क्पृ॑थि॒वी र॑थन्त॒रम॑न्वाहार्य॒पच॑नं॒ यजु॑र॒न्तरि॑क्षं वा॒मदे॒व्यमा॑ह॒वनी॑य॒स्साम॑ सुव॒र्गो लो॒को बृ॒हत्तस्मा॑द॒ग्नीन्प॑र॒मं वद॑न्त्यग्निहो॒त्रꣳ॒ सा॒यं प्रा॒तर्गृ॒हाणा॒ं निष्कृ॑ति॒स्स्वि॑ष्टꣳ॒ सु॒हु॒तं य॑ज्ञक्रतू॒नां प्राय॑णꣳ॒ सु॒व॒र्गस्य॑ लो॒कस्य॒ ज्योति॒स्तस्मा॑दग्निहो॒त्रं प॑र॒मं वद॑न्ति य॒ज्ञ इति॑ य॒ज्ञेन॒ हि दे॒वा दिवं॑ ग॒ता य॒ज्ञेनासु॑रा॒नपा॑नुदन्त य॒ज्ञेन॑ द्विष॒न्तो मि॒त्रा भ॑वन्ति य॒ज्ञे स॒र्वं

प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतमस्स्वयंभुः प्रजापतिस्संवथ्सर इति संवथ्सरोऽसावादित्यो य एष आदित्ये पुरुषस्स परमेष्ठी ब्रह्मात्मा याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिश्शान्त्या चित्तं चित्तेन स्मृतिꣳ स्मृत्या स्मारꣳ स्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति तस्मादन्नं ददन्थ्सर्वाण्येतानि ददात्यन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्म योनिस्स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत्स स भूतꣳ स भव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठाश्श्रद्धा सत्यो महस्वान्तपसोवरिष्ठाद्ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः वसुरण्वो विभूरसि प्राणे त्वमसि संधाता ब्रह्मन्त्वमसि विश्वधृत्तेजोदास्त्वमस्यग्निरसि वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीतैतद्वै महोपनिषदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत्॥ १००॥ ॥ ७९॥

[[10-80-1]]
तस्यैवं विदुषो यज्ञस्यात्मा यजमानश्श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदश्शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमश्शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यथ्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यथ्सायं प्रातरत्ति तथ्समिधं यत्प्रातर्मध्यंदिनꣳ सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्द्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवथ्सराश्च परिवथ्सराश्च तेऽहर्गणास्सर्ववेदसं वा एतथ्सत्रं यन्मरणं तदवभृथ एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यꣳ सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत्॥ १०१॥ ॥ ८०॥

अम्भस्येकपञ्चाशदुत्तरशतं जातवेदसे चतुर्दश भूरन्नं भूरग्नये भूरग्नये चैकमेकं पाहि पाहि चत्वारि

च॒त्वारि॒ यश्छन्द॑सां॒ द्वे नमो॒ ब्रह्म॑ण ऋ॒तं तपो॒ यथा॑ वृ॒क्षस्यैक॑मेकम॒णोरणी॑या॒ꣳ
श्च॒तु॑स्त्रि॒ꣳशत्सह॒स्र॒शी॑र्ष॒ꣳ षड्वि॑ꣳशतिरादि॒त्यो वा ए॒ष आ॑दि॒त्यो वै तेज॒ एक॑मेकं॒ निध॑नपतये॒
त्रयो॑विꣳशतिस्स॒द्योजा॒तं त्रीणि॑ वामदे॒वायैक॑म॒घोरे॓भ्य॒स्तत्पुरु॑षाय॒ द्वे द्वे॒ ईशानो नमो हिरण्यबाहव
एक॑मेकमृ॒तꣳ स॒त्यं द्वे सर्वौ॒ वै च॒त्वारि॒ कद्रु॒द्राय॒ त्रीणि॒ यस्य॒ वैक॑ङ्कती कृणु॒ष्व पाजोऽदि॑ति॒रापो॒ वा
इ॒दमेक॑मेक॒माप॑ः पुनन्तु च॒त्वार्य॑ग्निश्च सूर्य॑श्च नव॑ न॒वोमिति॑ च॒त्वार्या॑या॑तु॒ पञ्चौजो॑ऽसि॒ दशो॒त्तमे॑
च॒त्वारि॒ घृणि॒स्त्रीणि॒ ब्रह्म॑मेतु॒ मां यास्तैं ब्रह्मह॒त्यां द्वाद॑श॒ ब्रह्म॑ मे॒धया॒ऽद्या न॑ इ॒मं भ्रू॒णह॒त्यां ब्रह्म॑
मे॒धवाँ॑ ब्र॒ह्मा दे॒वाना॑मि॒दं वी॑रह॒त्यामेका॒न्न वि॑ꣳशति॒रेका॒न्न वि॑ꣳशति॒र्मे॑धा दे॒वी मे॒धां म॒ इन्द्र॑श्च॒त्वारि॑
च॒त्वार्या॑ माँ मे॒धा द्वे मयि॑ मे॒धामेक॒मपै॑तु प॒रं वातं॑ प्रा॒णम॑मु॒त्रभू॒याद्ध॒रि॒ꣳ शल्कै॑र॒ग्निं मा छि॑दो मृत्यो॒
मा नो॑ म॒हान्तं॒ मा न॑स्तो॒के प्रजा॑पते स्वस्ति॒दा त्र्य॑म्बकं॒ ये ते॑ स॒हस्र॑म॒युतं॒ द्वे द्वे॑ मृ॒त्यवे॒ स्वाहैकं॑
दे॒वकृ॑त॒स्यैका॑दश॒ यद्वो॑ दे॒वाः कामोऽकार्षी॒न्मन्युरकार्षी॒द्द्वे॑ द्वे॒ तिलाञ्जुहोमि गाव॑श्श्रियं प्र॑जाः पञ्च॒
तिलाः कृष्णाश्चोर॑स्य॒ श्रीः प्रज्ञातु जातवे॑दस्स॒प्त प्राणवात्त्वक्छिर उत्तिष्ठ पञ्च॒
पृथिवीशब्दमनोवाग्व्यक्तात्माऽन्तरात्मा परमात्मा मेँ क्षु॒धेऽन्नमय॒ पञ्च॑दशा॒ग्नये॒
स्वाहैक॑चत्वारि॒ꣳशदो॑न्तद्ब्र॒ह्म नव॑ श्र॒द्धायाँ॑ प्रा॒णे  निवि॑ष्टो॒ऽमृतं॑ जुहो॒मि चतु॑र्वि॑ꣳशतिश्श्र॒द्धायाँ॑ प्रा॒णे
निवि॑श्या॒मृत॑ꣳ हु॒तन्दशाङ्गु॒ष्ठमात्रः पुरुषो द्वे वाङ्म॑ आ॒सन्न॒ष्टौ वय॑स्सुप॒र्णाः प्राणानां ग्रन्थिरसि द्वे द्वे॒
नमो रुद्रायैकं॒ त्वम॑ग्ने॒ द्युभि॒र्द्वे शि॒वेन॑ मे॒ सन्ति॑ष्ठस्व स॒त्यं प्रा॑जाप॒त्यस्तस्यै॒वमेक॑मेक॒मशीतिः ॥
८० ॥

अम्भ॑स्यपा॒रे स्व॒स्ति न॑ः पा॒हि नो॑ अग्न॒ एक॑याऽऽदि॒त्यो वा ए॒ष ऋ॒तꣳ स॒त्यमोमित्या माँ मे॒धा मा
न॑स्तो॒के तिलाञ्जुहोमि श्र॒द्धायाँ॑ प्रा॒णे निवि॑श्य॒ तस्यै॒वमेकोत्त॑रश॒तम्॥ १०१ ॥

[[10-0-0]]
स॒ह ना॑ववतु।
स॒ह नौ॑ भुनक्तु।
स॒ह वी॒र्यं॑ करवावहै।
ते॒ज॒स्वि ना॒वधी॑तमस्तु॒ मा वि॑द्विषा॒वहै॑।
ॐ शान्ति॒ः शान्ति॒ः शान्ति॑ः ॥